अभिमुखगते तस्मिन्नेव प्रिये बहुशो वद-
त्यवनतमुखं तूष्णीमिव स्थितं मृगनेत्रया ।
अथ किल चलच्छीलालोलं स एव तथेक्षितः
कथमपि यथा दृष्ट्वा मन्ये कृतं श्रुतिलङ्घनम् ॥१०७॥

॥ अथ प्रियतममुद्दिश्यानुरागाभिव्यञ्जकप्रियसखीसमालिङ्गनोदाहरणम् ॥

तिर्यग्वर्तितगात्रयष्टिविषमोद्वृत्तस्तनास्फालना-
च्चुत्यन्मौक्तिकमालया सपुलकस्वेदोल्लसद्गण्डया ।
दूरादेव विलोकयत्यभिमते तद्वक्त्रदत्तेक्षणं
दुर्वारस्मरया तया सहचरी गाढं समालिङ्गिता ॥१०८॥

॥ उद्गतमन्मथोत्थचेष्टितोदाहरणानि श्लोकत्रयेणाह ॥ 10

अनिमित्तं यद्विहसति निष्कारणमेव यत्सखीं वदति ।
दयितं विलोक्य तदियं शंसति तदधीनमात्मानम् ॥१०९॥

प्रादुष्यद्भुजमूलकान्तिललितामुत्क्षिप्य दोर्वल्लरीं
वल्गत्पीनपयोधरस्थलचलन्मुक्तावलीसुन्दरम् ।

[1]) AD यस्मिन्नेव [2]) B त्यनवत° C °मेवास्थितं [3]) B चलल्लज्जा° [4]) A दृष्ट्वा C मन्ये दृष्ट्वा A कृति [5]) *om.* ADL; BC *om.* अथ; B only: ॥ सहचरीसमालिंगनोदाहरणं ॥ [6]) AB तिर्यग्वलित° D °मो वृ° CDE °लन-चुट्य° [7]) A पुपुल° D सपुलकं A °द्गात्रया [8]) A °कय ·भि° C °भिहंते [9]) ACE °स्मरतापया C प्रियसखी [10]) *om.* ADE; B उद्गतमन्मथचेष्टा श्लोकत्रयेण [11]) E यद्धसति A *om.* ति BCE नि.कार° AC *om.* यत् A यद्वदति [12]) C तदिदं [13]) B °कांतिकलताम्° D °कांतिललिताम्° A °दूप दो° [14]) A °स्थल ·ल° C °चलान्मु° D °लुल्मु° E °लुलन्मु°

अङ्गुल्यग्रचलत्कलापवलयधानोपकृतस्मरं [1]
तन्व्याः कुञ्चितलोचनं विजयते तत्कर्णकण्डूयनम् ॥११०॥ [2]

सखीऽवतंसं रशनां च किं चित्प्रियं समालोक्य समासजन्ती। [3]
पुनस्तरां मा मुकुदो ददाति प्रत्यङ्गमावासमिव स्मरस्य ॥१११॥ [4]

५ व्याजृम्भणोल्लासितदन्तमयूखजालं [5]
व्यालम्बमौक्तिकगुणं रमणे मुदेव । [6]
ऊर्ध्वं मिलद्भुजलतावलयप्रपञ्च- [7]
सत्तोरणं हृदि विशत्यपराध्युवास ॥११२॥ [8]

अन्योऽपि करोत्येतत्सर्वमुक्तमन्मथा [9]
१० दुरवस्था पुनः कान्तमभियुङ्क्ते स्वयं यथा ॥११३॥ [10]

॥ तद्वचनोदाहरणम् ॥ [11]

उल्लंघ्यापि सखीवचः समुचितामुत्सृज्य लज्जामलं [12]

[1]) BE अंगुल्या प्रचलत्क° B °त्कपोल° A °लापि° D °लापविलसत्स्या-नोप° A °वस्थानो° C °स्थानो° E °त्कलापवलयस्थानो° [2]) A तन्व्या C सख्याः D तन्वाः A °चनं समभवत्कर्णास्य क° [3]) BCDE रसनां D तथालोक्य E सदालोक्य AC समाश्रयन्ती D समासृजन्ती [4]) D पुरस्तरां A प्रत्यग्रम° AC °मावास° [5]) A °मयूखमाल- B °मरीचिजालं C °जाल E मयूषजाल [6]) BD व्यालंबि E व्यालं। बे C रमणेन CDE मुदेव [7]) B ऊर्ध्वमि° D ऊर्ध्व लसद्भुजलतावलतावलय° [8]) A सन्तोरणं D सतो° In A the r. विशत्य° is intimated. B वसत्य° CE विशत्य° AC °रा व्युवासे E ऽध्युवास [9]) C °तत्पूर्वं° A °मुपत° B °मुद्धृत D °मुधत° A °थात् [10]) D दूरावस्तं C °स्था च सा ABDE °युङ्क्ते [11]) *om.* ADE; B तद्वचने श्लोकः [12]) A समुदितामुल्लङ्घ्य लज्जानदी B समुचितामुत्सृज्य लज्जाभरं CE °तामुन्मृज्य C लज्जाम् (sic)

क्षिप्त्वा भीतिभरं निरस्य च निजं सौभाग्यगर्वं मनाक् ।
आज्ञां केवलमेव मन्मथगुरोरादाय नूनं मया
त्वं निःशेषविलासिवर्गगणनाचूडामणिः संश्रितः ॥११४॥

॥ एतस्याः प्रियदर्शने सुखानुभवस्वरूपम् ॥

चक्षुर्मीलति सानन्दं नितम्बः प्रस्रवत्यपि ।
वेपते च तनुस्तन्व्यास्तस्यास्तद्दर्शने यथा ॥११५॥

॥ तथैवोदाहरणम् ॥

मीलन्मन्थरचक्षुषा परिपतत्काञ्चीग्रहव्यग्रया
गाढानङ्गभरस्रवज्जघनया कम्पोपरुद्धाङ्गया ।
सर्वाङ्गीश्चदुकारको ऽप्यबलया संकेतके कौतुका-
दास्तां रन्तुमहो निरीक्षितुमपि प्रेयान्न संभावितः ॥११६॥

॥ अथ नायकं प्रति मुग्धावस्थाभिव्यञ्जकसखीवचनेन लक्षणोदाहरणाबाह ॥

नाभियुङ्क्ते स्वयं कन्या मुग्धत्वादुःस्थितापि तम् ।
तदवस्थां तु कान्ताय तत्सखी कथयेद्यथा ॥११७॥

1) C त्यक्त्वा E भित्वा 2) B घात्ता D °दाय मूर्ध्ना मया 3) A °विलास° E °लासं सिवपाना° C °गणानं BE °मणो 4) *om.* ADE; B ॥ अथ प्रियदर्शनानुषंगः ॥ C °भवयस्व° 5) B दिगालोकास्यसंप्रोषो नितं प्रश्रवत्यपि A नितम्बं 6) E °स्तन्वो तस्या° 7) *om.* ACDE 8) D परिलसत्कां° 9) In B the r. गाढानन्द° is mentioned; AE °सवद्भमणाया BD °स्रवत्त° 10) A सर्वाङ्गं च° B सर्वानं C सर्वगि E सर्वांगं CD °कारके E °कारकाऽप्य° 12) *om.* ADE; B only ॥ नायकं प्रति मुग्धावस्था ॥ C °व्यञ्जक° C °णोदाहरणोचाह 13) BCD °युङ्क्ते E °युक्ति B °दुदुस्थि° CD °त्वादुस्थि° A ताम् 14) ACE तदवस्था A तत्सखे

निःश्वासेषु स्खलति कदलीवीजनं तापसंप-
न्नेत्राम्भोभिर्झटिति पतितैः सूच्यते तत्स्तनान्तः ।
तस्याः किं चित्सुभग तदभूत्तानवं त्वद्वियोगा-
द्येनाकस्माद्वलयपदवीमङ्गुलीयं प्रयाति ॥११८॥

5 अनन्यशरणा स्वीया रतदार्या पराङ्गना ।
अस्यास्तु केवलं प्रेम तेनैषा रागिणी मता ॥११९॥

॥ अथ वेश्यालक्षणम् ॥

सामान्यवनिता वेश्या सा वित्तं परमिच्छति ।
निर्गुणेऽपि न विद्वेषो न रागः स्याद्गुणिन्यपि ॥१२०॥

10 तत्स्वरूपमिदं प्रोक्तं कैश्चिद्ब्रूमो वयं पुनः ।
बलवत्त्वानया युक्त्या तासामप्यनुरागिताम् ॥१२१॥

शृङ्गाराभास एव स्याद्यदि ता रागवर्जिताः ।
तद्व्यापारोऽथ वा तासां स्मरः किं भक्तितो वकैः ॥१२२॥

[1]) BDE निश्वा° A निश्वासे यत्स्खलति A °वेजनं C *om.* संप B °म्भोभि स्थगितपतितैः D नेत्राम्भोभिश्चिरस्थिपतितैः A °र्फटिति E °भिः स्थिमितिपतिते E सिच्यते द्राहि स्त° A सूच्यते · · तान्त. B °ते च स्त° B तास° [3]) E °योगे येना° [5]) A स्वेया धनहार्या C वनहार्या A तेनैवा C रागिणो [7]) *om.* BDE; A ॥ अथ वेश्या वर्ण्यते ॥ [9]) E पि न च द्वेषो A विद्वेष्यो AD नानुरागो गुणेऽप्यपि (D गुणि°) C न द्वेषः स्यान्नानुरागो गुणिन्यपि [10]) A कश्चिद्ब्रूमो [11]) A बलवनया° CE बलवत्पनया (C °त्या) A युक्ता नासा° E तन्यमप्य° AE °रागिता [12]) AC °राभास E °भाज D तां रागवर्जितां B °र्जिता [13]) E न व्यापारो BCD वकैः

तस्मात्तासामपि क्वापि रागः स्यात्किं तु सर्वदा ।
धनार्थं कृत्रिमैर्भावैर्ग्राम्यान्व्यामोहयन्ति ताः ॥१२३॥

लिङ्गी प्रच्छन्नकामश्च नर्मन्यश्च षण्ढकः ।
सुखप्राप्तधनो मूर्खः पितृवित्तेन गर्वितः ॥१२४॥

इत्यादीन्प्रथमं ग्राम्याञ्ज्ञात्वाकृष्य च तद्धनम् ।
अपूर्वा इव मुञ्चन्ति तानेतास्तापयन्ति च ॥१२५॥ 5

किं तु तासां कलाकेलिकुशलानां मनोरमम् ।
विस्मारितापरस्त्रीकं सुरतं जायते यथा ॥१२६॥

॥ तदुदाहरणम् ॥

गाढालिङ्गनपीडितस्तनतटं स्विद्यत्कपोलस्थलं 10
संदष्टाधरमुक्तसीत्कृतमतिभ्रान्तभ्रु नृत्यत्करम् ।
चाटुप्रायवचो विचित्रमणितं घातैर्नखैश्चाङ्कितं
वेश्यानां धृतिधाम पुण्यधनुपः प्राप्नोति धन्यो रतम् ॥१२७॥

[1]) B स्यात्किं न AC सर्वथा [2]) A °र्ग्राम्यान्संमोह° C °र्भावै ग्राम्यं भावै व्यामोहयंति ताः E °र्ग्राम्य व्या° [3]) B प्रछन्नभावश्च AC नर्मन्यश्च A शण्ठक BC संडयः D वंडकः E संढकः [4]) E मूर्खः B पितृवत्तेन E दर्पित: [5]) B इत्यादि प्रथमं ज्ञात्वा सम्यग्वर्यंति तद्धनं C इत्यादि प्र° ग्राम्य ज्ञात्वाकृत्य च D °म ग्राम्यान् ज्ञुत्वाकृत्य च E इत्यादि प्र° ग्राम्या ज्ञात्वाकृ° [6]) D अपूर्वमिव E अपूर्वानिव [7]) C °केलिः [8]) A विस्मितानां पर° [9]) *om.* ACDE [11]) D संदृ° B °तननि° C तनभ्रिभांत्या प्रनृत्य° D °तमभिभ्राम्यक्षु E °तमभोभ्राताभ्रु [12]) D corr. °भणितं D घातैः स्तनैश्चांकितं E घातैर्नखैश्चाक्षितं [13]) A °धनुषा C °धनुषो AC धन्यो रतं सेवते

॥ पुनरपि वेश्याप्रशंसा प्रोक्तत्रयेण ॥

ईर्ष्या कुलस्त्रीषु न नायकस्य निःशङ्ककेलिर्न पराङ्गनासु ।
वेश्यासु चैतद्द्वितयं प्ररूढं सर्वस्वमेतास्तदहो स्मरस्य ॥१२८॥

कुप्यत्पिनाकिनेत्राग्निज्वालाभस्मीकृतः पुरा ।
5 उज्जीवितः पुनः कामो मन्ये वेश्याविलोकितैः ॥१२९॥

आनन्दयन्ति युक्त्या ताः सेविता घ्नन्ति चान्यथा ।
दुर्विज्ञेयाः प्रकृत्यैव तस्माद्वेश्या विषोपमाः ॥१३०॥

॥ अथ नायिकानामानि ॥

स्वाधीनपतिकोत्का च तथा वासकसज्जिका ।
10 अभिसंधिता विप्रलब्धा खण्डिता चाभिसारिका ॥१३१॥

प्रोषितप्रेयसी चैव नायिकाः पूर्वसूचिताः ।
ता एवात्र भवन्त्यष्टाववस्थाभिः पुनर्यथा ॥१३२॥

॥ अथ स्वाधीनपतिकालक्षणम् ॥

यस्या रतिगुणाकृष्टः पतिः पार्श्वं न मुञ्चति ।
15 विचित्रविभ्रमासक्ता सा स्वाधीनपतिर्यथा ॥१३३॥

---

[1]) *om.* ACDE [2]) A ट्स्क्रा C कुल° B तु [3]) B वैश्यासु C वतिहं [5]) A यज्जी° D पुनर्मारो A °वलोकनैः BC °वलोकितै D °विलोकनै [6]) C °यायु° A युक्त्याराताम् B सेविता. C नान्यथा [7]) A तस्माद्वेश्या BD °वमा [8]) *om.* ADE; B यथात्र स्वस्त्याधिकारामाद् C यत्र [9]) A °पतिकोत्का च E °पतिरुत्का च A तथा · · सक° [10]) D *om.* अभि A *om.* ता E *om.* वि DE °ब्धा च C °ताभिचा° [11]) D चेति E नायका. [12]) D एता एवमत्रांत्य° [13]) *om.* ADE [15]) D विचित्रमतना कृटा B °मासक्ता स्वाधीनपतिश्च यथा

॥ तथोदाहरणम् ॥

लिखति कुचयोः पत्त्रं कण्ठे नियोजयति स्रजं
तिलकमलिके कुर्वन्गण्डादुदस्यति कुन्तलान् ।
इति चटुशतैर्वारं वारं वपुः परितः स्पृश-
न्विरहविधुरो नास्याः पार्श्वं विमुञ्चति वल्लभः ॥१३४॥ 5

॥ अथोत्कालक्षणम् ॥

उत्का भवति सा यस्याः संकेतं नागतः प्रियः ।
तस्यानागमने हेतुं चिन्तयत्याकुला यथा ॥१३५॥

॥ अथोत्कोदाहरणम् ॥

किं रुद्धः प्रियया कया चिदथ वा सख्या समुद्वेजितः 10
किं वा कारणगौरवं किमपि यन्नात्रागतो वल्लभः ।
इत्यालोच्य मृगीदृशा करतले संस्थाप्य वक्त्राम्बुजं
दीर्घं निःश्वसितं चिरं च रुदितं क्षिप्ताश्च पुष्पस्रजः ॥१३६॥

॥ अथ वासकसज्जालक्षणम् ॥

1) om. ACDE 2) BCDE पत्रं 3) A कुर्वन्नागादु° C कुर्मन् रागादु° D कुर्वन्नुर्वागुद्° E कृर्वन सर्गादु° B °दुदस्य च 4) C वयः A स्पृशद् 5) B यस्याः C चास्याः B न मुंचति 6) om. ADE; B om. लक्षणं 7) A उत्का ACE यस्या AE वासके 8) D तस्याः ना° D चिंतयंत्या° 9) om. cdd. 10) C मनोद्वद्वेजितः D मनोद्वे° E मनोद्वे° B °जितः 11) A यन्नायारतिर्जल्लभः C यन्नागतो DE यन्नापागतो 12) D °लोक्य 13) A निश्वसितं B निस्वसितं C निश्वसितो D निःश्वसित E दीर्घन्निश्वसितं C च रुचिर 14) om. ADE: B वासकसज्जाया ल°

भवेद्वासकसज्जासौ सज्जिताङ्गरतालया ।
निश्चित्यागमनं भर्तुर्द्वारेक्षणपरा यथा ॥ १३७ ॥

॥ अथ वासकसज्जोदाहरणम् ॥

दृष्ट्वा दर्पणमण्डले निजवपुर्भूषां मनोहारिणीं
५ दीपार्चिःकपिशं च मोहनगृहं त्रस्यत्कुरङ्गीदृशा ।
एवं नौ सुरतं भविष्यति चिरादद्येति सानन्दया
कामं कान्तदिदृक्षया विलसिता द्वारे दृगारोपिता ॥ १३८ ॥

॥ अथाभिसंधितालक्षणम् ॥

निरस्तो मन्युना कान्तो नमन्नपि यया पुरा ।
१० दुःस्थिता तं विना साभिसंधिता कथिता यथा ॥ १३९ ॥

॥ अथाभिसंधितोदाहरणम् ॥

यत्पादप्रणतः प्रियः परुषया वाचा स निर्वासितो
यत्सख्या न कृतं वचो जडतया यन्मन्युरेको धृतः ।

[1]) D भवेद्वा सज्जा सा D °सता° A °लये [2]) A निश्चत्या° D °क्षया परा [3]) *om.* ACDE; B ॥ वासकसज्योदाहरणं ॥ [4]) C *om.* मण्डले C °वपुरूपां [5]) B °कपिशा B °गृहे E °गृह तन्व्या कु° [6]) D न. C सुतरां [7]) B कान्तदिदृ° A तिलकिता C तिलधिता DE °क्षयातिलालिता (D °ता) [8]) *om.* ADE; B *om.* लक्षणं [9]) A यया पुन. C पुरा यया D पुनः [10]) B दुःस्थिता C °संधितेति मता यथा A कथिता बुधै. [11]) *om.* CDE; B *om.* अथ A only ॥ यथा ॥ [12]) A प्रिया D पति. E परुषया B निर्भर्सितो D निर्वासितो [13]) D यन्मन्यु इत्यादृत. A धृतः

पापस्यास्य फलं तदेतदधुना यच्चन्दनेन्दुद्युति-
प्रालेयाद्रिसमीरपङ्कजविसैर्गात्रं मुहुर्दह्यते ॥ १४० ॥

॥ अथ विप्रलब्धालक्षणम् ॥

प्रेष्य दूतीं स्वयं दत्त्वा संकेतं नागतः प्रियः ।
यस्यास्तेन विना दुःस्था विप्रलब्धा तु सा यथा ॥ १४१ ॥ 5

॥ अथ विप्रलब्धोदाहरणम् ॥

यत्संकेतगृहं प्रियेण कथितं संप्रेष्य दूतीं स्वयं
तच्छून्यं सुचिरं निषेव्य सुदृशा पश्चाच्च भग्नाशया ।
स्थानोपासनसूचनाय विगलत्सान्द्राञ्जनैरश्रुभि-
र्भूमावक्षरमालिकेव रचिता दीर्घं रुदत्या शनैः ॥ १४२ ॥ 10

॥ अथ खण्डितालक्षणम् ॥

कुतश्चिन्नागतो यस्या उचिते वासके प्रियः ।
तदनागमसंतप्ता खण्डिता सा मता यथा ॥ १४३ ॥

[1]) D पापस्यास्य फलं B यचंदनं दुद्युति C यच्चदनं दुधुति E यच्चद्रिः सानां दुधुति A °द्युति [2]) A प्रालेयांशु° CD °यांशु° E °यांशु° A °विसै° B °त्रिसै° CD °त्रिसैं° E °श्विसे° [3]) *om.* ADE; B *om.* लक्षणम् [4]) E प्रेक्ष्य D गत्वा [5]) D दुःस्था C दुस्था D दुःस्थां E दुःस्था प्रलब्धा साभ्रयथा BCD °लब्धा च [6]) *om.* ACDE [7]) In A the r. यत्र× केत° is mentioned. E संप्रेक्ष्य [8]) B तत्शूर्न्यं (sic) C एतच्छून्यं D निषेव्य A *om.* सुदृ [9]) D °पायनं° B °प्रू- चनाय A °सुचि- [10]) ACE लिखिता B निहिता BDE रुदंत्या C रुदंत्याशया [11]) *om.* ADE; B *om.* लक्षणम् [12]) C वस्य D वासरे E वासिके [13]) D तदागमन° B °संप्राप्ता

॥ तयोदाहरणम् ॥

सोत्कण्ठं रुदितं सकम्पमसकृद्यातं सबाष्पं चिरं
चक्षुर्दत्तु निवेशितं सकरुणं सख्या समं जल्पितम् ।
नागच्छत्युचितेऽपि वासकविधौ काले समुद्विग्नया
५तत्तत्किं चिदनुष्ठितं मृगदृशा नो यत्र वाचां गतिः ॥१४४॥

॥ अथाभिसारिकालक्षणम् ॥

या निर्लज्जीकृता बाढं मदेन मदनेन वा ।
अभियाति प्रियं साभिसारिकेति मता यथा ॥१४५॥

॥ तयोदाहरणम् ॥

१०नो भीतं तडितो दृशा जलमुचां तद्दर्शनाकाङ्क्षया
नो गर्जितणिता भृशं श्रुतिसुखं तद्वाचि संचिन्त्य च ।
धारापातसमुद्भवा न च मता पीडा तदालिङ्गनं
वाञ्छन्त्या दयिताभिसारणविधौ तन्व्या परं तत्परे ॥१४६॥

॥ अथ प्रोषितपतिकालक्षणम् ॥

[1]) *om.* ACDE [2]) B °सकृद्यातं; in margin r. of the text. ABCD सत्राष्पं E सबाष्पो D चिराच् [3]) A निरोपितं [4]) D वासर° [5]) CE *om.* तत् once B °नुष्ठितं CDE °नुष्टितं [6]) *om.* ADE; B *om.* लक्षणम् [7]) BD निर्लज्जा कृ° A गाढं BC वाढं D वाला ADE मदनेन मदेन D च A °सारिकेति B °सारिकाभिमता D °सारिका कथिता C only has अभियाति साभिसारिकेति मता ॥ [9]) *om.* ACDE [10]) A भीतिं A न वा instead of दृशा [11]) A गर्जितुं° (sic) DE गर्जितगणिता C गर्जनगणितं A °सत्रं C तद्वा स° [12]) A °समुद्भवा CD न गणिता E न च मताक् B °लिंगनं [13]) B तद्वांया [14]) *om.* ADE; B ॥ अथ प्रोषिता ॥

कुतश्चित्कारणाद्यस्याः पतिर्देशान्तरं गतः ।
दुःखावधिं भृशार्ता सा प्रोषितप्रेयसी यथा ॥ १४७ ॥

॥ यथोदाहरणम् ॥

उत्क्षिप्यालकमालिकां विलुलितामापाण्डुगण्डस्थला-
द्विश्लिष्यद्वलयप्रपातभयतः प्रोन्नम्य किं चित्करौ ।
द्वारस्तम्भनिषण्णगात्रलतिका केनापि पुण्यात्मना
मार्गालोकनदत्तदृष्टिरबला तत्कालमालिंग्यते ॥ १४८ ॥

निःश्वाससंतापसखीवचोभिश्चिन्ताश्रुपातादियुता सखेदा ।
वाच्या प्रलब्धा गतभर्तृकोत्काभिसंधिता खण्डितया स-
ह्यात्र ॥ १४९ ॥

विचित्रमण्डना हृष्टा भवेत्स्वाधीनभर्तृका ।
तथा वासकसज्जापि सा किं त्वागतुकप्रिया ॥ १५० ॥

कुलजान्याङ्गना वेश्या त्रिधा स्यादभिसारिका ।
यथैवोक्तास्तथैवान्याः स्वाधीनपतिकादयः ॥ १५१ ॥

[1]) C कुतश्चि° [2]) D om. सा D गयोन्ति° B मता [3]) om. ACDE [5]) A °इलय ··· भयत. ACD प्रोन्नम्य B का चित्क° [6]) D °निषन्न° [7]) B °मालिंगिता B adds: ॥ इति नायकोदाहरणं ॥ C ॥ इत्यष्टनायिकोदाहरणानि ॥ [8]) BCE निःश्वा° D °सखीतनोक्तिः चिन्ताश्रु° E °सखीवचोर्भि° B °चोभिर्भृताश्रु° A °युतायादि° C °युता. सखेदा. [9]) A वाच्य B वा त्रिय° C ता द्विय° C °धिताः [10]) CE °नायका म° [11]) B स्यादिह त्वागतु° D °दि किं तु यागतुं-कप्रिया [12]) A कुलटा° [13]) C °का तथा नान्या D °तथा थान्या. B °थान्या D °थान्या. D °पतिका तथा

॥ अथ स्वकीयापरकीयाभिसारिकालक्षणम् ॥

कुलजा संवृता त्रस्ता सव्रीडा तद्गृहं व्रजेत् ।
नायकं परनारी तु समन्तादनवेक्षिता ॥ १५२ ॥

॥ अथ वेश्याभिसारिकालक्षणम् ॥

5 सखीयुक्ता मदाधिक्यात्स्फारिताक्षी त्वशङ्किता ।
सशब्दाभरणा कामं वेश्या सरति नायकम् ॥ १५३ ॥

त्रयोदशविधा स्वीया द्विविधा च पराङ्गना ।
एका वेश्या पुनश्चाष्टाववस्थाभेदतो मताः ॥ १५४ ॥

पुनश्च तास्त्रिधा सर्वा उत्तमामध्यमाधमाः ।
10 इत्थं शतत्रयं तासामशीतिश्चतुरुत्तरा ॥ १५५ ॥

॥ अथोत्तमालक्षणम् ॥

दोषानुरूपकोपा यानुनीता च प्रसीदति ।
रज्यते च भृशं नाथे गुणाढ्योत्तमेति सा ॥ १५६ ॥

[1]) *om.* ADE; C °परकीयावेश्याभि° [2]) A कुलटा ABC सव्रीडं A च द्दुतं (sic) वृ° E च द्रुतं वृतेत [3]) E च A सदान्यैरनवेक्षिता D सर्वदान्यैर·वेक्षिता E सदान्यैरप्यवेक्षिता In B margin the gloss दृष्टा is written [4]) *om.* ACE [5]) B सख्या यु° D °युता मदत्रिडा स्फा° C °धिक्या स्फा° AE °क्षी न श° C °क्षी चमत्कृता D °क्षी नराश्रिता [7]) From this line to stanza 164, 2 lost in A [8]) D °भेदता मता. E °भेदतोऽत्र ता AB मता [9]) C तास्त्रिधा भिन्ना CD उत्तमाधमनध्यमा [10]) B °त्तर· E °त्तर [11]) *om.* DE [12]) E सु प्रसी° [13]) C °त्तमा यथा

॥ अथोत्तमोदाहरणम् ॥

कान्ते किं कुपितासि कः परजने प्राणेश कोपो भवेत्
कोऽयं सुभ्रु परस्त्वमेव दयिते दासोऽस्मि किं ते परः ।
इत्युक्त्वा प्रणतः प्रियः क्षितितलादुत्थाप्य सानन्दया
नेत्राम्भःकणिकाङ्किते स्तनतटे तन्व्या समारोपितः ॥१५७॥ 5

॥ अथ मध्यमालक्षणम् ॥

दोषे स्वल्पेऽपि या कोपं धत्ते कष्टेन तुष्यति ।
प्रयाति कारणाद्रागं मध्यमा सा मता यथा ॥१५८॥

॥ अथ मध्यमोदाहरणम् ॥

प्रस्फारस्फुरिताधरापि विलसद्गण्डस्थलप्रस्खल- 10
द्घर्माम्भःकणिकापि भङ्गुरतरभ्रूभेदभूपाप्यलम् ।
पादान्तप्रणते प्रिये प्रकटयत्यन्तःप्रसादं प्रिया
केशान्नूपुरमण्डलीशबलितानुन्मोचयन्ती शनैः ॥१५९॥

॥ अथाधमालक्षणम् ॥

1) *om.* CDE; B *om.* अथ  2) C किं B पतिहाने  3) B पार्जनेव  4) C °क्त्वा D °त्वा E °त्वा E प्रणतं C *om.* त. D पतिः C °दुत्थाय सानंदया  5) D °कांचिते In D the st. बाले नाथ Amaru v. 53 (= Ind. Sprüche 4443) is interpolated  6) *om.* DE; C ॥ अथ मध्यमलक्षणं ॥  7) In B st. 158 is *om.* C तुष्यति E तुंचति  9) *om.* edd.  10) B *om.* प्र C प्र-स्फारस्फु° D °धरा प्रतिस्फुरद्ग° 11) E °तरं CE °भूरुह° 12) D पादांते प्र° E पादांत प्र° C प्रियो 13) D °न्ते प्र° BCD °मुन्मि° 14) *om.* DE; B *om.* लक्षणम्

या कुप्यति विना दोषैः स्निह्यत्यनुनयं विना ।
निर्हेतुकप्रवृत्तिश्च चलचित्तापि साधमा ॥१६०॥

॥ अथाधमोदाहरणम् ॥

यत्राधःकृतकामकार्मुककयोर्भ्राम्यद्भ्रुवोर्विभ्रमः
⁵सद्यःप्रोद्गतचन्द्रकान्तिजयिनी यस्मिन्कपोलच्छविः ।
यत्र स्वेदकणावलुप्तमहिमा हारोऽप्युरोजस्थले
कोऽयं मानिनि मत्प्रसादविमुखः प्रत्यग्रमानग्रहः ॥१६१॥

जातिकालवयोऽवस्थाभावकन्दर्पनायकैः
इतरा अप्यसंख्याः स्युर्नोक्ता विस्तारभीतितः ॥१६२॥

¹⁰इत्यादि सकलं ज्ञात्वा स्वयं चालोक्य तद्विदाम् ।
कवीनां च विशेषोक्त्या ज्ञातव्याः सकला इमाः ॥१६३॥

रोमाञ्चवेपथुस्तम्भस्वेदनेत्राम्बुविभ्रमाः ।
वाच्याः संभोगशृङ्गारे कविना नायिकाश्रिताः ॥१६४॥

संबन्धिमित्रद्विजराजतीक्ष्णवर्णाधिकानां प्रमदा न गम्याः ।

[1]) C स्निग्धत्यनुयं [2]) D °वृतिश्च C °श्च लचि° E °चित्तेति E साधना [3]) *om.* CDE [4]) In C काम twice [5]) C °चंद्रविस्रत° D °चंद्रविंत्रत° E °चद्रविंस्रत° [6]) B °बलिप्त° C °त्पर्णविलुप्त° D °णावुल्पुप्त° (sic) [7]) B कामिनि मत्प्रणामवि° [8]) C वयो twice E जातिश्यकलावस्था° [9]) B पुनस्ता थप्य° DE त्रिस्तर° [10]) D चालोच्य B मातव्या [13]) Here A recommences. A वेत्रयास्तं° B कविनायका° D कविनायिका° ACE नायका° [14]) C *om.* राज C °तीक्ता° D °क्ष्णे° A °वर्णादिकानां

व्यङ्गास्तया प्रव्रजिता विभिन्नमल्लाश्च धर्मार्थमनोभवज्ञैः ॥१६५॥

अनेन मार्गेण विशेषरम्यं संभोगशृङ्गारमिमं वितन्वन् ।
भवेत्कविर्भावरसानुरक्तो विदग्धगोष्ठीवनितामनोज्ञः ॥१६६॥

॥ इति श्रीमद्रुद्रभट्टविरचिते शृङ्गारतिलकाख्ये काव्यालंकारे संभोगशृङ्गारो नाम प्रथमः परिच्छेदः ॥ 5

[1]) A व्यङ्ग्यास्तया D व्यंग्या° A °मित्नाश्च [2]) A रागेण A °रम्यं D विदित्वा [3]) E °रसानुविद्ध C °गोवनि° [4]) B श्रीरुद्रविर° C श्रीरुद्रभट्ट° D श्रीरुद्रभट्ट° E श्रीभट्टरुद्रवि° BC °तिलके D *om.* शृङ्गा° C *om.* काव्या° [5]) DE *om.* संभोग° नाम B °शृंगारे *om.* नाम C adds ॥ १ ॥ E समाप्तः

॥ अथ विप्रलम्भलक्षणम् ॥

विप्रलम्भाभिधानोऽयं शृङ्गारः स्याच्चतुर्विधः

पूर्वानुरागो मानाख्यः प्रवासः करुणात्मकः ॥ १ ॥

॥ अथ पूर्वानुरागलक्षणम् ॥

5 दंपत्योर्दर्शनादेव प्ररूढगुरुरागयोः ।

ज्ञेयः पूर्वानुरागोऽयमप्राप्तौ स भवेद्यथा ॥ २ ॥

॥ अथ पूर्वानुरागान्वितनायिकावाक्योदाहरणम् ॥

किं चन्दनै रचय मा च मृणालशय्यां

मा मा ममालि धुनु कोमलतालवृन्तम् ।

10 मुग्धाग्रदं विकचपङ्कजयोक्षणेषु

तत्संगमः परमपाकुरुते स्मराग्निम् ॥ ३ ॥

॥ अथ पूर्वानुरागावस्थास्थितनायकस्वरूपनिरूपणम् ॥

[1]) E has before: श्री नरस्वे: शिव. रामस्तेभ्यो नमो गुरुभ्यः; *om.* ADE; B *om.* अथ C विलंन° [2]) A °भिधानो [3]) A मानाख्य× B प्रकाशः [4]) *om.* ADE [5]) CD समुत्पन्नानुरागयोः (C °ना°) [6]) E °प्राप्तौ या दशा यथा B संभवे° [7]) *om.* ADE; B ॥ अत्र पूर्वानुरागाख्य विप्रलंभवतीवाक्यं इद सहचरीं प्रति यथा ॥ C °गान्विनायिकावक्यो° [8]) A किं चन्दनैरथ च मुञ्च मृ° C *om.* च D °शय्यां [9]) A म मा [10]) A °ऊरुदर्शनेषु [12]) *om.* ADE; B ॥ पूर्वानुरागाख्यविप्रलंभावस्था°

यत्सारैरिव पङ्कजस्य घटितं यच्चन्द्रगर्भादिव
प्रोत्कीर्णं यदनङ्गसायकशिखाभासेव संवर्धितम् ।
यत्संसिच्य सुधारसैरिव रतेरास्थानभूमीकृतं
तद्भूयोऽपि कदा सरोरुहदृशः पश्यामि तस्या मुखम् ॥ ४ ॥

मृणालकन्दलीचन्द्रचन्दनाम्बुरुहादिकम् । 5
तत्रानयोः स्मरातङ्कशान्तये नैव सेवितम् ॥ ५ ॥

॥ अथ दशावस्था ॥

आलोकालापसंरूढरागाकुलितचेतसोः ।
तयोर्भवेदसंप्राप्तौ दशावस्थः स्मरो यथा ॥ ६ ॥

अभिलाषोऽथ चिन्ता स्यात्स्मृतिश्च गुणकीर्तनम् । 10
उद्वेगोऽथ प्रलापः स्यादुन्मादो व्याधिरेव च ॥ ७ ॥

जडता मरणं चैव दशमी जायते ध्रुवम् ।
असंप्राप्तौ भवन्त्येतास्तयोर्दश दशा यथा ॥ ८ ॥

॥ यथाभिलाषलक्षणम् ॥

व्यवसायो भवेद्यत्र बाढं तत्संगमाशया । 15
संकल्पाकुलचित्तत्वात्सोऽभिलापः स्मृतो यथा ॥ ९ ॥

[1]) D यसंदर्विंन्यादश्च A °दिव: [2]) B °शायक° C °सायक° [3]) E रतिरा° [4]) A यद्भूयो A सदा *om.* दृ [5]) A मृणाली° ACD °कदली° E °लीकंद [6]) A °तङ्कं प्रमयेन्नैव [7]) *om.* ACDE [8]) A °दारा° [10]) A *om.* stanzas 7 and 8 D स्यान्मृतिश्च [11]) B प्रलाप [12]) DE दशमं E सायते C यथा [14]) *om.* ADE; B °लापवत्या ल° [15]) BDE वाढं D °संगमेच्छया [16]) AD भिल्पाषो (A षि°) मतो

॥ तत्रोदाहरणम् ॥

प्रविशति यथा गेहे ऽकस्माद्वहिश्च विचेष्टते
वदति च यथा सख्या सार्धं सहासमिवोत्सुका ।
दयितवदनालोके मन्दं यथा च चलत्यसौ
5 मृगदृशि तथा तस्यां शङ्के स्मरेण कृतं पदम् ॥१०॥

॥ अथ चिन्तालक्षणम् ॥

कथं स वल्लभः प्राप्यः किं कुर्यां तस्य तुष्टये ।
कथं भवेदसौ वश्य इति चिन्ता भवेद्यथा ॥११॥

॥ तयोदाहरणम् ॥

10 सत्यं दुर्लभ एष वल्लभतमो रागो ममास्मिन्पुनः
कोऽप्यन्योऽस्ति गुरुर्न चातिनिपुणाः सख्योऽस्य संबोधने।
संचिन्त्येति मृगीदृशा प्रियतमे दृष्टे श्लथां मेखलां
बध्नत्या न गतं स्थितं न च गलद्धासो न वा संवृतम् ॥१२॥

॥ अथ स्मृति ॥

15 द्वेषो यत्रान्यकार्येषु तदेकाग्रं च मानसम् ।

1) *om.* ACDE 2) D has before: श्रीगणाधीपतये B यथाकस्माद्गेहे वहिश्च CD °द्वहि° E तस्माद्ब्य° 3) C *om.* च B तथा D भृतं B साकं C °मिहोत्सुका 4) AE दयितनयना° B *om.* च A चल° C यथापि चल° 5) AE तथैतस्या CD तथैवास्यां 6) *om.* ADE 7) AD स कथं BE मिष्टये 8) B वल्य 9) *om.* ACDE 10) C सत्यं वल्लभ एष दुर्ल्लभतमो 11) E कोऽन्यश्चातिर्गुरुर्न A पि D न i. of ऽस्ति DE चापि नि° BC °पुणं. 13) CD बधुत्या E बधुंत्या 14) *om.* ADE 15) A द्वेषो न्यत्र च का° B द्वेषे C यत्रान्यदोषु E प्रद्वेषोऽन्यत्र का°

श्वासैर्मनोरथैश्चापि चेष्टा तत्स्मरणं यथा ॥ १३ ॥

॥ तयोदाहरणम् ॥

इन्दुं निन्दति पद्मकन्दलदलीतल्पं न वा मन्यते
कर्पूरं किरति प्रयाति न रतिं प्रालेयधारागृहे ।
श्वासैः केवलमेव खेदिततनुर्ध्यायत्यसौ बालिका
यत्तत्कोऽपि युवा सखि स्मरसुहृच्चेतस्यमुष्याः स्थितः ॥ १४ ॥

॥ अथ गुणकीर्तनम् ॥

सौन्दर्यहसितालापैर्नास्त्यन्यस्तत्समो युवा ।
इति वाणी भवेद्यत्र तदिदं गुणकीर्तनम् ॥ १५ ॥

॥ तयोदाहरणम् ॥

तद्वक्त्रं हसितेन्दुमण्डलरुचि स्फारं तदालोकितं
सा वाणी जितकामकार्मुकरवा सौन्दर्यमेतस्य तत् ।
इत्थं संततमालि वल्लभतमध्यानप्रसक्तात्मन-
श्चेतश्चुम्बितकालकूटमिव मे कस्मादिदं मुह्यति ॥ १६ ॥

॥ यथोद्देशः ॥

[1]) E °नोरथैश्चा° A चेष्ट · स्म° B चेष्टा स्मर° C चेष्टात (i. e. चेष्टा) E चेष्टा च स्मरणं व्यथा [2]) om. ACDE [3]) D पद्मकांडकद्लो° E पद्मकंद्कद्लो° [5]) D श्वासे. AB खिपति तनुं (B °नु) ध्यानाध्यसौ E °तनुर्ध्यातेत्यसौ [6]) D om. ऽपि BE युवं inst. of सखि [7]) om. DE; A om. अथ adds यथा C ॥ अथ गुणकीर्तनचेष्टालक्षणोदाहरणे ॥ [9]) ADE तदिदं [10]) om. ACDE [11]) A °मण्डलमिति CDE °मंडलमतिस्फारं [13]) A संततालि D °प्रसक्त° [14]) A °श्चुम्बित का° [15]) om. DE; A om. अथ B °लक्षणं C °लक्षणोदाहरणं

यस्मिन्नम्यमरम्यं स्यान्न च हर्षाय किं चन ।
प्रद्वेषः प्राणितव्येऽपि स उद्वेगः स्मृतो यथा ॥१७॥

॥ तस्योदाहरणम् ॥

अग्न्यागारं कलयसि पुरश्चक्रवाकीव चन्द्रं
५ वह्नोत्कम्पं शिशिरमरुता दह्यसे पद्मिनीव ।
प्राणान्धत्से कथमपि बलाद्गच्छतः शल्यतुल्यां-
स्तत्केनासौ सुतनु जनितो मान्मथस्ते विकारः ॥१८॥

॥ अथ प्रलापः ॥

वम्भ्रमीति मनो यस्मिन्नत्यौत्सुक्यादितस्ततः ।
१० वाचः प्रियाश्रिता एव स प्रलापः स्मृतो यथा ॥१९॥

॥ तस्योदाहरणम् ॥

इत्थं तेन निरीक्षितं न च मयाप्येवं समालोकित-
स्तेनोक्तं सुभगेन तत्र न मया दत्तं वचो मन्दया ।
तत्सत्यं कथयालि किं स सुभगः कुप्येन्न मह्यं गत
१५ इत्युक्त्वा सुदृशा कयापि वलितग्रीवं दृशौ स्फारिते ॥२०॥

[1]) B स्यात् न A हर्षो च  [2]) D संदेहः A प्रपि° B °तव्यो C °तव्य
[3]) *om.* ACDE  [4]) A °गारं and sup. रागं B °कारं  [5]) B गाढोत्कंठा
B दह्यते  [6]) A चिरागच्छतन् A °तुल्यास् BD °तुल्यान् C °तुल्यां त°  [7]) A
गन्म°  [8]) *om.* CDE; A ॥ प्रलापो यथा ॥  [9]) A यस्मिन्यात्यौ°  [10]) A
प्रियाश्र ता एव स प्रलापो मतो  [11]) *om.* ACDE  [12]) C तं न AC न च
B च स E मया सो प्येवमालो° A °कित. D °कितं  [13]) E तत्र च मया
[14]) B *om.* स A कुप्येत····इत्यु° B मयुच्चकैः D मह्यं निगद  [15]) A °रितौ

॥ अथोन्मादः ॥

श्वासप्ररोदनोत्कम्पवसुधोल्लेखनैरपि ।
व्यापारो जायते यत्र स उन्मादः स्मृतो यथा ॥ २१ ॥

॥ तयोदाहरणम् ॥

देवीवानिमिषेक्षणा विलिखति क्षोणीं श्वसित्युच्चकैः
किं चिद्ध्यायति निश्चलापि बलवद्रोमाञ्चिता कम्पते ।
रोदित्यङ्कगतां विलोक्य सुचिरं वीणामतिव्यापृता
स्वल्पैरेव दिनैरियं वरतनुः केनापि संशिक्षिता ॥ २२ ॥

॥ अथ व्याधिः ॥

संतापवेदनाप्रायो दीर्घश्वाससमाकुलः ।
तनूकृततनुर्व्याधिरष्टमो जायते यथा ॥ २३ ॥

॥ तयोदाहरणम् ॥

तापः शोषितचन्दनोदकरसः श्वासो विकीर्णोत्पलः
कर्पूराभिभवप्रचण्डपटिमा गण्डस्थले पाण्डिमा ।
क्षायद्बालमृणालनालललिता प्राप्ता तनुस्तानवं
तन्वंग्याः कथितः स्मरेण गुरुणा कोऽप्येष कष्टक्रमः ॥ २४ ॥

[1]) *om.* DE; A ॥ उन्मादः ॥ B °दलक्षणं [2]) D श्वास° A °प्रमोदनो° DE °धालेख° [3]) C °ते ऽयत्र AC उन्माद् A मतो [4]) *om.* ACDE [5]) E °क्षणां C श्वसत्यु° [6]) D चिद्रूध्यायति C निश्चितापि A °ला च D *om.* पि [7]) A °पृतां B °घृता D °वृतां E °पृतिः [8]) A केनानुसंशि° [9]) *om.* ADE [10]) C *om.* प्रायो [11]) A कृता तनुतन्व्या° C तन्व° D तथा [12]) *om.* ACDE [13]) C शोषित° D °दकरसः A श्वासो यको° B श्वासाविको° C श्वासावको° [14]) A कर्पूराभिनवप्रचंड° B कर्पूरप्रभवं प्रचंड° D °भवः प्र° [15]) A क्षाम्यद्या° DE °नालनलिता B °स्तानवं [16]) AC °ङ्गया A कथित° ABC कथित° D लेव

॥ अथ जडता ॥

अकाण्डे यत्र हुंकारो दृष्टिः स्तब्धा गता स्मृतिः ।
श्वासः समधिकः कार्श्यं जडतेयं स्मृता यथा ॥ २५ ॥

॥ तयोरुदाहरणम् ॥

[5]दृष्टिर्निश्चलतारकाधरदलं श्वासैः कृतं धूसरं
प्राप्तं वासरचन्द्रबिम्बपदवीं वक्त्रं विनष्टा स्मृतिः ।
हुंकारः परमेक एव वचनस्थाने स्थितः सांप्रतं
मन्ये ऽस्याः कुसुमायुधः सशिविरः प्रत्यङ्गमावासितः ॥ २६ ॥

॥ अथ मरणावस्था ॥

[10]उपायैर्विविधैर्नार्या यदि न स्यात्समागमः ।
कन्दर्पशरभिन्नाया मरणं जायते ततः ॥ २७ ॥

पुंसो ऽपि हि भवन्त्येता दशावस्था मनोभवात् ।
मरणं किं त्वसौन्दर्यात्तयोः कैश्चिन्न बध्यते ॥ २८ ॥

अन्ये तदपि बध्नन्ति प्रत्युज्जीवनवाञ्छया ।
[15]वृत्तानुवादे तच्छस्तमुत्पाद्ये प्रायशो न हि ॥ २९ ॥

[1]) *om.* DE; AB *om.* अथ B adds लक्षणं [2]) A अकाले CDE दृष्टि [3]) CE प्रश्वासः समधिकाः (C °मा°) D °धिकं कार्श्यं A मता [4]) *om.* ACDE [5]) C °तारिका° A °तलं [7]) B वचनः E स्थाने ततः D स्थितं ABD सशिविरः CE सशरधि. E °मावेशितः [9]) *om.* ACDE [10]) A उपायैर्वनितेर्वापि DE °यैर्वनितैर्नार्या [11]) D °शराजिताया [12]) D मनाःभुव [13]) A किं च सौन्दर्या- त्तयो× किं च न बाध्यते BD °र्यान्न तु कैश्चिन्नि° C मृपश्यते [14]) A °ज्जन° [15]) D °वादेन A तत्सत्यमुद्यन्ते in margin ये B तद्वत्स्तमु° प्रायशोदित E तत्र शस्त°

एकस्मिंस्तु मृतेऽप्यन्यो यदि जीवेत्कथं चन ।
का स्नेहगणना तत्र म्रियते चेन्न संगमः ॥ ३० ॥

पूर्वं नारी भवेद्रक्ता पुमान्पश्चात्तदिङ्गितैः ।
ततः संभोगलीलेति स्वभावसुभगा स्थितिः ॥ ३१ ॥

अन्यथापि न दोषः स्याद्यदि प्रेम समं द्वयोः ।
रक्तापरक्तवृत्तिश्चेच्छृङ्गाराभास एव सः ॥ ३२ ॥

अयं च प्रायशस्तज्ज्ञैरित्थं ह्यास्यो निबध्यते ।
निर्धनेन मया सार्धं वेश्ये मानय यौवनम् ॥ ३३ ॥

अनुरक्तो भवेद्यस्यां नायकस्तत्सखीजनम् ।
साम्ना मानेन दानेन बाढमावर्जयत्यसौ ॥ ३४ ॥

तस्याग्रे तत्कथां कुर्वन्स्वाभिप्रायं प्रकाशयेत् ।
तदभावे नियुञ्जीत कां चित्प्रव्रजितादिकाम् ॥ ३५ ॥

तद्द्वारेण समाख्यातस्वभावो ज्ञाततन्मनाः ।
उपचारपरैर्लेखैः साधयेत्तामतन्द्रितः ॥ ३६ ॥

[1]) E एकस्मिन्तु A मृते त्वन्यो B मृतेऽन्यो A द्वि [2]) CD मृयते BE संगतः C संयः D संभम. [3]) A पुमान्यता तदीङ्गितैः [6]) B °वृत्तिश्च शृं° CE °वृत्तिस्तु शृं° B °राभाय [7]) B धनेन सा° AE हास्येतु B हास्येतुतु C हासे A बध्यते B बध्यते C प्रबध्यते [8]) In D this line is put before l. 11. A सार्कं [9]) C भवेत्पत्र D °जन. [10]) A दानेन मानेन D दाने मानेन BD वाढ° [11]) B तस्यामितत्क° E तद्ये D प्रकाशते [12]) D न्ययुंजीत D °व्राजिका° BE °व्रजिका° A °व्रजितादिका. C °व्रजितादिकां [13]) B तद्वा° C ताद्वा° D तद्वी° C °तन्मना: BD °तन्मना [14]) B उपचार° A °र्लेपैर्नादराया° D °र्लेखैः

ततो दृष्ट्वा विविक्ते तामिन्द्रजालकलादिभिः ।
प्रयोगैर्ललितैः स्वैरं विस्मयं परमं नयेत् ॥ ३७॥

धात्रीसखीवेश्मनि रात्रिचारे महोत्सवे तीव्रभये वने च ।
निमन्त्रणे व्याधिमिषेण शून्ये गृहे तयोर्नूतनसंगमः स्यात्
॥ ३८ ॥

5 यदा रागो गुरुः सा च लभ्यते नैव याचिता ।
क्षीणोपायस्तदा कन्यां नायकः साधयेत्ततः ॥ ३९ ॥

परस्त्रीगमनोपायः कविभिर्नोपदर्शितः ।
सुन्दरं किं तु काव्याङ्गमिति मया निगद्यते ॥ ४० ॥

वामता दुर्लभत्वं च स्त्रीणां या च निवारणा ।
10 तदेवं पञ्चबाणस्य मन्ये ऽहं परमायुधम् ॥ ४१ ॥

बहुमानाद्भयाद्वापि नृणामन्यत्र योषिति ।
प्रच्छन्नकामिता रम्या सतामपि भवेद्यथा ॥ ४२ ॥

॥ तयोदाहरणम् ॥

[1]) C दृष्ट्वा A °कलादि° [2]) C प्रयोगैर्विविधै E च परं [3]) B चारिचारे महोत्सवो E व्याधिनिति च BE शून्ये AC गेहे D गृहे E नृहि [6]) ACE °दा कन्या B °दा नारी साधयेन्नामतद्गिल AE साधयेदिति C साधदिति [7]) D °नो-पायाः C °भिर्न प्रद° D °र्शिता E °पदिश्यते [8]) A काव्यङ्गं सकृत्रत्नाङ्गिम° E काव्यांगमेतत्रेत निदर्शितं B मया [9]) From वामता to योषिति st. 54 lost in A [10]) C तदेव D ता एव BD °बाणस्य CDE om. ऽहं CDE परमम° [12]) BDE °कामितं BDE रम्यं BE तामपि [13]) om. DE; C तदुदा°

जीर्णं तार्णकुटीरकं निवसनं तल्पीकृतं स्थण्डिले
नीरन्ध्रं तिमिरं किरन्ति सलिलं गर्जन्त एते घनाः ।
गच्छामीति वदत्यसावपि मुहुः शङ्काकुला केवलं
चेतश्चित्रमहो तथापि रमते संकेतके कामिनाम् ॥ ४३ ॥

॥ अथ मानप्रकारः ॥ 5

स मानो नायिका यस्मिन्नीर्ष्यया नायकं प्रति ।
धत्ते विकारमन्यस्त्रीसङ्गदोषवशाद्यथा ॥ ४४ ॥

॥ तदुदाहरणम् ॥

किं चिद्बाष्पजलावलेशललिते नेत्रे मनाक्कुञ्चिते
रागो विस्फुरणानुबन्धरुचिरः संदर्शितो गण्डयोः । 10
कम्पश्चाधरपल्लवे विरचितः कामं कुरङ्गीदृशा
नो जाने किमयं प्रिये प्रकटितः कोपोऽभिलाषोऽथ वा ॥४५॥

स प्रायशो भवेत्त्रेधा कामिनीनां प्रियं प्रति ।
अवेक्ष्य दोषमेतस्य गरीयान्मध्यमो लघुः ॥ ४६ ॥

॥ अथ गुरुमानः ॥ 15

प्रतिनार्यां गते कान्ते स्वयं दृष्टे नखाङ्किते ।

3) D वदत्यसावपि C *om.* शंका 4) CE हरते BCE कामिनो 5) *om.* DE 6) D has before: स मानो नायिकामिनां BE समाना E नायका D यास्मि° C °र्ष्यया 7) C *om.* सङ्ग B °वसा° 8) *om.* D; E मानाख्यविप्रलंभस्य शृंगारस्योदाहरणमाह । 9) C °जलांविले च ल° D °लेय° E °लाविले 11) D समाकुंचिते 12) C कोप प्रसादो ऽथ वा D *om.* वा 13) C मानिनीनां 15) *om.* DE; C *om.* अथ B °मानभेद. 16) C प्रतिभार्यां

तद्वासोदर्शने गोत्रस्खलिते च गुरुर्यथा ॥ ४७ ॥

॥ तयोदाहरणम् ॥

बिम्बोष्ठः स्फुरति प्रयाति पटुतां गण्डस्थले शोणिमा
यातस्तिर्यगमू दृशौ च बलवद्भ्रूयुग्ममुद्राम्यति ।
5 इत्थं चण्डि तथा तवैष रुचिरः कोपक्रमो जृम्भते
जातोऽहं प्रणतीरपास्य सुतरामेतद्विदुर्यथा ॥ ४८ ॥

॥ अथ मध्यममान. ॥

दृष्टे प्रियतमे रागादन्यया सह जल्पति ।
सख्याख्याते तथा दोषे मानोऽयं मध्यमो यथा ॥ ४९ ॥

10 ॥ तयोदाहरणम् ॥

वाचो वाग्मिनि किं तवाद्य परुषाः सुभ्रु भ्रुवोर्विभ्रमो
ऽप्युद्भ्रान्तः कुत एव लोलनयने किं लोहिते लोचने ।
नास्त्यागो मयि किं मुधैव कुपितेत्युक्ते पुरः प्रेयसा
मानिन्या जलबिन्दुदन्तुरपुटा दृष्टिः सखीष्वाहिता ॥५०॥

15 ॥ अथ लघुमान. ॥

सविलासस्फुरच्चञ्चुर्वीक्षमाणेऽपरां प्रिये ।

[1]) B °ते वि C °ते व [2]) *om.* CDE [3]) D पटतां E पांडिमा [4]) C ग्राते तिर्य° D याते तिर्य° B च चपलं भ्रू° [5]) C तया E कोपक्रमा [6]) CE नितरामे° [7]) *om.* DE; BC *om.* अथ C मध्यमान [9]) E संख्याते च वा दोषे CE मानः स्यान्मध्यमो [10]) *om.* CDE [11]) B वाङ्गिनि C तवात्र CE परुषा B भ्रुवो वि° [12]) DE एव [13]) B मुधेव D पुनः [14]) B °रसुधा [15]) *om.* DE; BC *om.* अथ; B °मानो यथा [16]) DE सविलासं स्फु° BD °क्षमाने C °क्षेमाने D यं परा BE परा

किं चिदन्यमनस्के च जायते स त्लघुर्यथा ॥ ५१ ॥

॥ तयोदाहरणम् ॥

मामेव ताडय नितम्बिनि यद्यकस्मा-
त्कोपो भवेत्तव मुखं तु निज्ञं किमेतत् ।
आनीयते शशधरानुकृतिं कपोल-
पालीप्लुतेन घनकज्जलनेत्रवारा ॥ ५२ ॥

देशकालबलात्कोपः प्रायः सद्यो ऽपि योषिताम् ।
जायते सुखसाध्यो ऽयं कृच्छ्रसाध्यो ऽपि कामिनाम् ॥ ५३ ॥

प्रज्वलितोज्ज्वलदीपं रतिगृहमिन्दूज्ज्वलं च सौधतलम् ।
मधुमधुरीकृतमधुकरमधुरध्वनिबोधितं च वनम् ॥ ५४ ॥ 10

इत्यादिषु प्रदेशेषु मानिनीनामसंशयम् ।
मन्युर्गुरुतमो ऽप्याशु सुखसाध्यो भवेद्यथा ॥ ५५ ॥

दृष्ट्वा चन्द्रमसं मनोभववधूकेलिक्रियाकन्दुकं

[1]) CD व B °तेऽय [2]) *om.* CDE [3]) E has before श्लो: [5]) C आयते E °कृति [6]) D °पालि° C °ते घन° C adds: पतंतजनाश्रुता वारां धरा (read धारा) नृत्यंतु केकिनः । यद्य कांतः कृतांतो वा दुःखस्यांतं करिष्यति ॥ ५३॥ cfr. Ind. Sprüche 3881. In C the following stanzas are accordingly numbered higher by one. B adds: ॥ इति माना. ॥ [7]) CDE सर्वोऽपि [8]) E °ध्यो पि यं E कामिभिः [9]) E °लं दीपं B तद्गृहमि° [10]) E मधुविधुरी° AB °धुनि योषितां वचन *With* योषितां *A recommences.* C °धिनं वचनं D °तं त्रिपिनं [11]) A कामिनीनाम° [12]) C मानो गु° A सुखसाध्यो In D stanza 55 is placed before st. 54 [13]) C °केलिप्रिया° D °केलिकृपा-कौतुकं

प्रोन्मीलन्नवमालतीपरिमलं चाघ्राय मानौपधम् ।
दीपार्चिःकपिशां विविक्तवलभीमालोक्य लोलदृशा
मानिन्या चटुमात्रकेण रमणे मानो मनाङ् मन्दितः ॥५६॥

मधुसमयशशधरोदयकन्दर्पमहादिकेषु कालेषु ।
⁵मानो मनस्विनीनामतिसुखसाध्यो भवेद्भूम्ना ॥५७॥

चन्द्रश्चन्द्रमुखीक्ष्यतां क्षणमियं संभाव्यतां मञ्जरी
चूतस्य स्मरविद्विपि प्रियतमे कोपे ऽपि केयं रतिः ।
इत्युक्ते सुचिरेण तत्करतलं पादाग्रसंवाहना-
द्धुन्वत्याः सुदृशो बलात्पुलकिते ऽङ्गे च दोर्वल्लरी ॥५८॥

¹⁰दूतीजनस्य पुरतो लघुरपि कोपो गुरूयते प्रायः ।
अभिनवदोषावसरे तथैव वनिताजनस्य यथा ॥५९॥

चरणपतनात्पत्युर्मन्यौ मनाक् शिथिलीकृते
त्यजति च किमप्युत्कम्पत्वं घनस्तनमण्डले ।
तदपि विलसत्साराङ्गादया प्रियानुंनयेच्छया

²) D °कपिशं A °शां च चित्रवलभी° C ° शां तिचित्रजल° C °दृशा E लालदृशा ³) E तन्वंग्या B °मात्रके पि न र° but पि del., as it seems CD °केन A मनाग्मन्दित. C मनाक् स्वदित. E मनाक मंद्रित ⁴) E °शशि-धरोदये A °महोत्सवेषु B °महोदयेषु D °महोद्रिकेषु ⁵) A °सुखसाध्यो ⁶) B चयमिव ⁸) BD इत्युक्ता E इत्युक्ता प्रणातस्य त° A °तले C °वाहनं E °वाहने ⁹) A धुन्वत्यास् C चंवंत्या B धुन्वंत्या. E धन्वंत्या B वलोन्पु° ¹⁰) C °लि-सो गु° ¹¹) D °तन्यस्य A °तनस्यैव ¹²) B °त्युर्माने ¹³) A भजति च C युजति च D किमप्युकं प्राप्तं घनस्तनमंडले C घनमतुले (sic) ¹⁴) ADE विल-सत्सार° C त्रिस्सता° D °च्या चिरादनवेक्षया E चिरानुनयेच्छया

कथमपि पुरो दृष्ट्वा दूतीं पुनर्भृकुटी कृता ॥ ६० ॥
चतुरचटुभिर्गाढाश्लेषैर्हठात्परिचुम्बनै-
र्मधुरवचनैर्वारं वारं गतोऽप्यतिमन्दताम् ।
अपरवनितासङ्गाल्लग्नं विलोक्य विलेपनं
कुवलयदृशः कोपः कान्ते पुनर्नवतां गतः ॥ ६१ ॥ 5
साम दानं च भेदः स्यादुपेक्षा प्रणतिस्तथा ।
तथा प्रसङ्गविभ्रंशो दण्डः शृङ्गारक्ला न तु ॥ ६२ ॥
तस्याः प्रसादने सद्भिरुपायाः षट् प्रकीर्तिताः ।
सुन्दरास्ते निदर्श्यन्ते सक्लोदाहृतिभिर्यथा ॥ ६३ ॥

॥ अथ साम ॥ 10

दुर्विनीतोऽपि पाल्योऽहं त्वया सुभ्रु क्षमाभृता ।
इति वाक्यं भवेद्यत्र तत्सामेति निगद्यते ॥ ६४ ॥

॥ तदुदाहरणम् ॥

सत्यं भामिनि दुर्जनोऽस्मि दयिते पाल्यस्तथापि त्वया
यो दोषः स लघुर्मृगाक्षि नियतं दीनस्य मे क्षम्यताम् । 15

[1]) C पुरो------कटो कृता A °भ्रुकुटी E °भ्रुकुटिः [2]) A चटुलवचनैर्गा° C कुटिलवचनैर्गा° D चटुल° D °हृसत्प° E °हृतात्प° D °चुंबित- [3]) A °रलकवलनै° C °रलवनने E °रलकवकलनैर्वार [4]) A °ललानं C °रूप्रः कामक्रोप. पु° E कांते कोप पु° [6]) A सामदाने [7]) A °विधुंसो B °रहानिकृत् C शृंगा ननु E शृंगारहेतवे [8]) D om. षट् D परिकी° [9]) AC सदुदाकृति° B °भिरत्तया [10]) om. ABDE; C om. अथ [11]) A यविनीतो D ऽय [12]) AE याप्यो [13]) om. ADE; B अथ सामोदा° [14]) C मानिनि [15]) A तद्दोयस्सक्लो मृगाक्षि E नो दोषः

इत्थं जल्पति वल्लभे मृगदृशा चतुर्दलं संवृतं
रक्तावं विरलीकृतं च वदने दत्तं च किं चिद्वचः ॥ ६५ ॥

॥ अथ दानम् ॥

अलंकारादिकं दद्यान्नायको यत्र तुष्टये ।
उद्दिश्य कारणं किं चिद्दानं तत्स्याच्च तद्यथा ॥ ६६ ॥

॥ तथोदाहरणम् ॥

प्रणयिना निजहारलतां स्वयं किल तवेति निवेश्य कु-
चस्थले ।
पुलकभाजि पुरा कुपिताप्यसौ कृतकचग्रहणं परिचुम्बिता
॥ ६७ ॥

॥ अथ भेदः ॥

यस्मिन्परिजने तस्याः समावर्ज्य प्रसादितम् ।
तेनैव लभते कान्तां कान्तो भेदः स उच्यते ॥ ६८ ॥

॥ तदुदाहरणम् ॥

धुन्वाना करपल्लवं विदधती दृष्टिं रुषा रागिणीं
तन्वाना वचनानि निठुरतरं मागाः शठेत्यं मुहुः ।

[1]) A तंलात् B °र्दुदलैः C °र्नलै. E चतुर्नलत्सवृतो C संरज [2]) B वयूत्तं D विमली° B °कृतं न वचने om. च before किं [3]) om. cdd. [4]) D दत्ता ना° [5]) B उद्देश्य E चिद्दत्तं लब्धागत यथा [6]) om. ACDE [7]) BCD °लता BE नवेति C तवेति B कुचद्वये [8]) From भाति to इणं 3, 6 lost in A [9]) om. CDE; B ॥ भेदलक्षणं ॥ [10]) C °इन E °र्ज्य C प्रसादने. [11]) C दत्ते BE कांत [12]) om. CDE [13]) B रागिणां C रागिनी D रागिणि [14]) B तन्वना B निठुर° CDE निठुर° B मागा शठोत्य

दूरादागतभीतिमत्यभिमते स्वैरं स्वसंज्ञाकृता
पूर्वावर्जितया चकोरनयना सख्येव संबोधिता ॥ ६९ ॥

॥ अथोपेक्षा ॥

प्रसादनविधिं त्यक्त्वा वाक्यैरन्यार्थसूचकैः ।
यस्मिन्प्रसाद्यते योषिदुपेक्षा सा मता यथा ॥ ७० ॥ 5

॥ तयोदाहरणम् ॥

एतत्किं ननु कर्णभूषणमयं हारः सुकाञ्ची नवा
बद्धा का चिदियं त्वयाद्य तिलकः श्लाघ्यः प्रिये कल्पितः ।
प्रत्यङ्गं स्पृशतेति तत्क्षणभवद्रोमाञ्चमालाञ्चिता
तन्वी मानमुपेक्षयैव शनकैर्धूर्तेन संमोचिता ॥ ७१ ॥ 10

॥ अथ प्रणतिः ॥

केवलं दैन्यमालम्ब्य पादपातो नतिर्मता ।
अभीष्टा सा भृशं स्त्रीणां ललिता च भवेद्यथा ॥ ७२ ॥

॥ तयोदाहरणम् ॥

कुङ्कुमार्द्रकुचकुम्भबिम्बितं वीक्ष्य पृष्ठमितराङ्गनाश्रयम् । 15

[1]) D °दायत° E °दायति° C °मते दृष्टे [3]) *om.* CDE [4]) B प्रसादविधिं D प्रसाधन° CE °विधि D त्यक्ता वाक्यैरर्थ° [5]) E यत्र प्रसा° [6]) *om.* CDE [7]) E एतत्कि तव कर्ण° D हारस्तु कांचीलता [8]) D चिद्यं [9]) D °मांचमालंचिता [10]) B °पेक्षयैव C संमोहिता [11]) *om.* E; CD *om.* अथ [12]) D *om.* केवलं B पादापातेन निर्मिता C °पातो [13]) C अभिष्टा E अभीष्ट सो मता D ललित C सा भ° E ललिता जायते यथा [14]) *om.* CDE [15]) C °कुंभिलबितं D °कुंभलिंगितं CDE पृष्ठमपरा° B °रांगणाश्रयं C °रांगनागत

शंसदूनरसमाशु सा मुदं प्राप पादपतितस्य कामिनः ॥७३॥

॥ अथ प्रसङ्गविभ्रंशः ॥

अकस्माज्जायते यत्र भयहर्षादिभावना ।
सोऽयं प्रसङ्गविभ्रंशः कोपभ्रंशात्मको यथा ॥ ७४ ॥

5 ॥ तथोदाहरणम् ॥

कथं ममोरसि कृतपक्षनिःस्वनः
शिलीमुखोऽपतदिति जल्पति प्रिये ।
निवृत्य किं किमिति ब्रुवाणयानया
ससाध्वसं कुपितममोचि कान्तया ॥ ७५ ॥

10 यथोत्तरं बलीयांस इत्युपायाः प्रसादने ।
आद्यास्त्रयो घनं कार्या विदग्धैः पश्चिमाः क्व चित् ॥७६॥

नातिखेदयितव्योऽयं प्रियः प्रमदया क्व चित् ।
मानश्च विरलः कार्यः प्रणामोत्सवलब्धये ॥ ७७ ॥

इत्युपायान्प्रयुञ्जीत नायिकापि प्रियं प्रति ।
15 क्रुद्धं नोपेक्षते किं चित्तत्रान्यत्कारणं भवेत् ॥ ७८ ॥

1) B सशदून° C शंसदूनं° D संसदूघनरसाशुना मुदं E संसभूतरस° B *om.* प्राप 2) *om.* DE; B *om.* अ 3) D °स्माद्यायते C *om.* भय D °भावनो 4) C °भ्रंशात्मतो 5) *om.* CDE; B ॥ अथ प्रसंगविभ्रंशोदाहरणं ॥ 6) C °निस्वन E °निस्वनं 7) E ऽपतमदिति 8) E विवृत्य C किमेतदि DE किमिदमिति C ब्रुवाणाया D ब्रुवाणया E ब्रुवाणना 9) C मायया 10) D बलीयान्न इत्युपाय° 11) CD °स्रय. सदा BE पश्चिमा D पश्चिम 13) D *om.* मान D प्रणामोत्स° CD °लिब्धये 14) E नायका° 15) B क्रुद्धा E क्रुद्धंनोपेक्षते C किं तु तत्रान्य° D किं तु तत्रान्य°

स्नेहं विना भयं न स्यान्मन्मथो नेर्ष्यया विना ।
तस्मान्मानप्रकारोऽयं द्वयोः प्रीतिप्रवर्धनः ॥ ७९ ॥
प्रियसुभगनाथवल्लभरुचिरस्वामीशकान्तचन्द्रमुखाः ।
दयितमनोरमरमणीजीविता इत्यादि नाम स्यात् ॥ ८० ॥
प्रीतौ भर्तरि सुदृशामप्रीतौ पुनरमूनि शठधृष्टौ । 5
निर्लज्जदुराचारौ निठुरदुःशीलनामानि ॥ ८१ ॥
गर्वाद्यसनात्त्यागाद्विप्रियकरणाच्च निठुराद्वचनात् ।
लोभादतिप्रवासात्स्त्रीणां द्वेष्यः प्रियो भवति ॥ ८२ ॥

॥ अथ प्रवासः ॥

परदेशं व्रजेद्यत्र कुतश्चित्कारणात्प्रियः । 10
स प्रवास इति ख्यातः कष्टावस्थो द्वयोरपि ॥ ८३ ॥

॥ तथोदाहरणम् ॥

दृष्टं केतकधूलिधूसरमिदं व्योम क्रमाद्वीक्षिताः
कान्ताश्च शिलीन्ध्रकन्दलभृतः सोढाः कदम्बानिलाः ।
सख्यः संवृणुताश्रु मुञ्चत भयं कस्मान्मुधैवाकुला 15

[1]) B स्यान्मनो [2]) B प्रति° C प्रीतिप्रिय° E प्रीतिर्विव° [3]) CE °सुभगरुचिरवल्लभनाथस्वामी° D °सुभगरुचिरुचिरवल्लभस्वामिनीत° [4]) D °मनोहर° CE °रमणी° edd. °जीवित [5]) E पुनरिमानि नामानि B °धृष्टः E °दृष्टौ [6]) E दुर्वृत्तो निठुरदुःशीलधामादि (sic, all) CD निष्ठुर° [7]) B °द्यसनात्त्या° CD निष्ठु° C °रात्त वच° E °रालापात [9]) om. CDE [10]) C कुतश्चित् D गतो यत्र [12]) om. DE; C रुदाहरा° [13]) D कष्टं के° B केतक° DE केतकि° C क्रमादिक्षितं D °क्षितं E °वीक्षिता [14]) B कान्ताश्च CE कष्टाश्च [15]) C सख्यो. D संवृणुताश्च C °ताश्रु B मञ्चत भयं C मुञ्च

एतानप्यधुनातिवज्रघटिता नूनं सह्विष्ये घनान् ॥ ८४ ॥

॥ अथ देशान्तरकामुकस्यावस्थावर्णनरूपम् ॥

कामं कर्णकटुः कृतोऽतिमधुरः केकारवः केकिनां
मेघाश्चामृतधारिणोऽपि विहिताः प्रायो विषस्यन्दिनः ।
५ उन्मीलन्नवकन्दलावलिरसौ शय्यापि सर्पायते
तत्किं यद्विपरीतमत्र न कृतं तस्या वियोगेन मे ॥ ८५ ॥

कार्श्यजागरमालिन्यचिन्ता वै तत्र जायते ।
अवस्था विविधा स्त्रीणां मृत्युः स्यादवधिः परम् ॥ ८६ ॥

॥ अथ देशान्तरगतनायकस्य नायिकामुद्दिश्य कामं प्रति सखीसोपालम्भवाक्यम् ॥

१० अद्यैव यत्प्रतिपदुद्गतचन्द्रलेखा-
सख्यं त्वया तनुरियं गमिता वराक्याः ।
काले गते कुसुमसायक तत्प्रभाते
बाणावलीं कथय कुत्र विमोक्ष्यसि त्वम् ॥ ८७ ॥

॥ अथ देशान्तरगतनायकनायिकास्वरूपनिरूपणम् ॥

1) D °धुनापि वज्र° C °प्ये धुना  2) *om.* CDE  3) B करोति मधुरः DE कृतो पि म° B केकिनो  4) C °मृतदायिनो D °मृतदायिनो E °मृतवर्षिणो B प्रायेण D चिरं स्य°  5) D °वनिर° CD °णौ सहाप्यनलायते E सर्पो च च शिख्यायते  6) C *om.* यद् E च्चिद्विप° D °तनय C कृते C °गेन किं  7) C कार्श्य° B °मालिन्यं DE °चिंतया D यत्र  8) C मृत्यु. देवये: DE मृत्युश्चेद्द्ये. (E °धि.) E पुरः  9) *om.* CDE  10) C °रेखा  11) D वराक्या  12) B °साधक E नु प्रभाते  13) B *om.* बाणा° E °लिं BD विमोक्षसि  14) *om.* DE; BC *om* अथ B *om.* गत B °नायकोना° C °नायकास्व° (*om.* नायिका) C °स्वरूपणं

निःश्वासैः सह सांप्रतं सखि गता वृद्धिं ध्रुवं रात्रयः
सार्धं लोचनवारिणा विगलितं तत्प्रवाणात्कङ्कणाम् ।
प्राणाशा तनुतामुपैति च मुहुर्नूनं तनुस्पर्धया
कन्दर्पः परमेक एव विजयी याते ऽपि कान्ते स्थितः ॥ ८८ ॥
नीरागो ऽधरपल्लवो ऽतिमलिना वेणी दृशौ नाञ्जिते
व्यालम्बालकमालिका धवलतामालम्बते ऽङ्गच्छविः ।
इत्थं सुभ्रु विसंष्ठुलापि विरहव्यापद्विमर्दादियं
सख्येव स्थिरशोभया दृढतरं प्रत्यङ्गमालिंग्यते ॥ ८९ ॥
किं तत्र नास्ति रजनी किं वा चन्द्रो न तत्र सौधरुचिः ।
येन सखि वल्लभामपि न स्मरति स मां विदेशरुचिः ॥ ९० ॥
प्रसर शिशिरामोदलोदं समीर समीरय
प्रकटय शशिन्नाशाः कामं मनोभव जृम्भ्यताम् ।
अवधिदिवसः पूर्णः सख्यो विमुञ्चत तत्कथां
हृदयमधुना किं चित्कर्तुं ममान्यदिहेच्छति ॥ ९१ ॥
इत्यादिविरहावस्थाः पुंसो ऽपि हि भवन्ति ताः ।

[1]) BCE निश्वा° D *om.* ध्रुवं E परां रा° [2]) D °वारिणैव गलितं B यत्प्राकृत कंकणं C तत्प्राकृते कंकणैः D तत्प्राकृताणात्कणैः E तत्प्राकृतं मे सुप्तं [3]) C मुहुस्प° D न तु स्प° [4]) B जाते D यातो E स्याने एकांतस्थितः C स्थिति. [5]) B °ल्लवे [6]) D व्यालंव्यालक° B °छविं D °छवि [7]) E सुभ्रुवि° B वि-संस्थलापि CD °हु° D विसस्थलापि E °व्यापारम° [8]) *edd.* सख्येव C °शोभया E °शोचया B °लिंगते E °लंगिता [9]) D रजनी B चंद्रो न किं त्वसावहचि. E न किं ह यो व्यहचि. [10]) B *om.* न [11]) B °हीदं CDE °मोदं C कौदं D लोदं E कौदं E समर B समीरयः [12]) CD जृंभतां [14]) B °दिदेहते

कन्दर्पशरघाताच्चा मा भूवन्वैरिणामपि ॥ १२ ॥

॥ अथ करुणात्मकः ॥

यत्रैकस्मिन्मृतेऽप्यन्यो मृतकल्पोऽथ तद्गतः ।
नायकः प्रलपेत्प्रेम्णा करुणोऽसौ स्मृतो यथा ॥ १३ ॥

5 ॥ तदुदाहरणम् ॥

दग्धा स्निग्धवधूविलासकदली वीणा समुन्मूलिता
पीता पञ्चमकाकली कवलिता शीतद्युतेः कौमुदी ।
लुष्टः स्पष्टमनेकरत्ननिचयो नाहं रतिः केवलं
कन्दर्प दहता हरेण भुवनं निःसारमेतत्कृतम् ॥ १४ ॥

10 ॥ अथ पुरुषप्रलापोदाहरणम् ॥

वक्त्रं चन्द्रमसा दृशौ मृगगणैः केशाः कलापिव्रजै-
र्मातङ्गैः स्तनमण्डलं भुजलतोल्लासश्चलत्पल्लवैः ।
सौगन्ध्यं मलयानिलेन बलिना तन्वी विभज्येति सा
सर्वैर्निष्करुणैर्हृताहृतमहो दैवेन किं चिन्न मे ॥ १५ ॥

15 इयतीं सुभगावस्थां गतोऽसि यस्याः कृते स्मरातङ्कात् ।

[1]) E °रिपोरपि [2]) *om.* DE; BC *om.* अथ [3]) C °स्मिन्विनष्टेऽन्यो D °स्मिन्विनष्टे न्यो E यत्रैकस्मिन त्रिपन्नेऽन्यो मृ° पि B तद्गता E तद्गतं [4]) B नायिका BDE °प्रेम्णा B मृतो E मतो [5]) *om.* CDE [6]) C °वधू° CE समुन्मीलिता [8]) B लुष्ट E लुटा E °रत्नरिपणा [9]) CE दहता [10]) *om.* DE; C *om.* अथ [12]) D °लतापाशश्च° CE °ल्लासो लतामंडपैः [13]) D °लेन दयिता पत्नी वि° C °निले [14]) BCD °र्निःक° E °र्निष्क° B °र्हृता भुजगते D *om.* हृता E °णै हृता भुवगतो तै येन दैवेन मे [15]) C इयंतो C *om.* ऽसि B यस्या C यस्याः D स्मरतां

मूर्छां ह्वरामि सा तव गतपुण्या नयनसलिलेन ॥ ९६ ॥

पाशो विपाशित इवाकृित एव सान्द्रः
कर्पूररेणुरुपगूढमुरो नताङ्गि ।
पापेन येन गमितासि दशाममुष्यां
मूर्छाविरामललितं मयि धेहि चक्षुः ॥ ९७ ॥

ग्लानो मुक्ताश्रुरुद्विग्नः स्रस्ताङ्गो नष्टचेतनः ।
सचिन्तो दैन्यभागस्मिन्नेवंप्रायो जनो भवेत् ॥ ९८ ॥

केषां चित्करुणाभ्रान्तिः कारुण्यादिह जायते ।
एतस्य मिथुनावस्थां विस्मृत्य रतिमूलजाम् ॥ ९९ ॥

स्त्रीपुंसोश्च भवेद्येष सापेक्षः संगमः पुनः ।
शृङ्गारवचनप्रायः करुणः स्यात्स चान्यथा ॥ १०० ॥

तस्माच्छृङ्गार एवायं करुणेनानुमोदितः ।
सौन्दर्यं सुतरां धत्ते निवद्धो विरलं वुधैः ॥ १०१ ॥

॥ अथ स्त्रीणां सात्त्विकाः ॥

[1]) B हरति B तनु° C गतगत° [2]) B पाशो विपासित CD उपासित BD सांद्र- [3]) E °गूढतरो C नतांगि D नतांगो [4]) B केन D *om.* येन CE गमितेति D दृशा° C °ममुष्मिन् E °ममुष्मिन [6]) E ग्लानो C मुक्तासुरु° D °द्विग्न. [7]) C °भाग° D °भागो स्मि° [8]) B °दिषु E °दिह [9]) D एतच C विसृत्य B मति° CD रतिभाजजा [10]) CE स्त्रीपुंसयोर्भ° D °द्वेषः CD सापेक्षे CE संगमे D संगमो [11]) E °वचनो प्राय. D करुणा C स्यान्न चा° D स्यात्सतां यथा [12]) BE तस्मात् शृं° D तस्मा शृं° D नामायं C करुणो नानु° [14]) *om.* DE; BC *om.* अथ

कारुर्दासी नटी धात्री प्रतिवेश्याथ शिल्पिनी ।
बाला प्रव्रजिता चेति स्त्रीणां ज्ञेयः सखीजनः ॥ १०२ ॥

कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः ।
माधुर्यं नर्मविज्ञानं वाग्मिता चेति तद्गुणाः ॥ १०३ ॥

5 विनोदो मण्डनं शिक्षोपालम्भोऽथ प्रसादनम् ।
संगमो विरहाश्वासः सखीकर्मेति तद्यथा ॥ १०४ ॥

॥ तदुदाहरणम् ॥

मया कोऽयं मुग्धे कथय लिखितः सत्वरसखी-
वचः श्रुत्वेत्युच्चैर्विनिहितदृशा चित्रफलके ।
10 न वक्तुं तन्वंग्या शकितमथ वोद्दामविद्दल-
त्कदम्बाकारेण प्रिय इति ममाख्यायि वपुषा ॥ १०५ ॥

प्रत्यङ्गं प्रतिकर्म नर्मपरया कृत्वाधिरूढस्मरा-
दौत्सुक्यं प्रविलोक्य मोहनविधौ चातुर्यमस्याः पुनः ।
सख्या यावकमण्डनं न रचितं पादे कुरङ्गीदृशः
15 सस्मेरं विशदच्छदे च शयने दृष्टिः समारोपिता ॥ १०६ ॥

नीरन्ध्रं परिरभ्यते प्रियतमो भूयस्तरां चुम्ब्यते ।

[1]) BE कारुदासी B नटो C °वेश्माथ E °वेश्मा च [2]) C स्त्रीणां प्रेष्यजना स्मृता. D ज्ञेया सखीजना [4]) B माधुर्यनर्म° B वाङ्मिता [5]) D विनोदं B मदनं D प्रसाधन [6]) C सखीकर्मेति [7]) om. CE [8]) D श्रवे BCD श्रोत्रं मुग्धे [10]) C शकितमथ किं तु विद्दलक° D शकितमथ वा चारुविद्दला- B °विलस- [12]) B कृत्वाभिरूढस्म° DE कृत्वा निरूढस्मरा- [13]) E °दौत्सुक्य E चातुर्यमालोक्य च [14]) B यावमंडनं C न चितं

तद्वाठं क्रियते यदस्य रुचिरं चाटूच्चकैस्तन्यते ।
सख्या मुग्धवधूरियं रतिविधौ यत्नेन संशिक्षिता
विज्ञातं गुरुणा पुनः शतगुणं पुष्पेषुणा कारिता ॥१०७॥

सुभग भवता कृच्चे तस्या ज्वलत्स्मरपावके
ऽप्यभिनिवसता प्रेमाधिक्यं चिरात्प्रकटीकृतम् । 5
तव तु हृदये शीतेऽप्येवं सदैव सुखात्तये
मम सहचरी सा निःस्नेहा मनागपि न स्थिता ॥१०८॥

कोपं विमुञ्च कुरु नाथ वचो मदीय-
माश्वासय स्मरकृशानुकृशां कृशाङ्गीम् ।
एकाकिनी कठिनतारकनाथकान्त्या 10
पञ्चत्वमाशु ननु यास्यति सा वराकी ॥१०९॥

अमुं दधे ऽशुकमहमत्र पादपे
युवामलं निभृतमिहैव तिष्ठतम् ।
रहःस्थयोरिदमभिधाय कामिनोः
पुरो ययौ निपुणसखी लतान्तरम् ॥११०॥ 15

[1]) BCD तद्वाठं E तद्वाठं D चाटुत्यमानन्यते E चाटूच्चकैः चाटू सूच्यते गूढ्य-कैस्तन्यते [2]) E रतविधौ [3]) E निर्भ्रांतगुरुणा C विज्ञात. D विज्ञांतः C करुणां D करुणा [4]) B तस्यां D तस्य [5]) D °निविशिता E °निविशेता D रागाधिक्यं [6]) E नु C सीते [7]) D निर्गूढा [8]) BE मदीयं [9]) B मा वानय C °स्वा° E °ज्वला कृ° C कृशांगी [10]) CE °तारकरात्त° D °तारकायक्रांत्यां [11]) B यास्यति E व्यास्यति [12]) C याह B दधे CDE दधे शुक° E शुकमिह पत्रपादपे C °हमत्र पादपे D adds: युवामत्र पादपे [13]) C युवामहं BC तिष्ठतां D तिष्ठतां E तिष्ठतं [14]) BDE रहस्थ° C रहस्तयो° B *om.* from मभिधाय to p. 68, l. 1 पुष्पे° [15]) E लतांतरे

